द्विति तदेनमुपावश्रयते स ह प्रिय ऽएवान्नस्यान्नादो भवति य्य ऽएवं व्विद्वानेतस्य व्रतᳪं शक्नोति चरितुम् ॥६॥ तद्वा ऽएतत् । दशमेहन्त्सत्रोत्थानं क्रियते तेषामेकैक ऽएव व्वाचंयम ऽआस्ते व्वाचमाप्याययंस्तयापीनयायातयाम्न्योत्तरमहस्तन्वतेऽथेतरे व्विसृज्यन्ते समिद्धारा वा स्वाध्यायं वा तत्राप्यश्नन्ति¹ ॥७॥ तेऽपराह्णऽउपसमेत्य । अपऽउपस्पृश्य पत्नीशालᳪं सम्प्रपद्यन्ते तेषु समन्वारब्धेष्वेतेऽआहुती जुहोती"हे² रन्तिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहे"ति पशूनेवैतदाह पशूनेवैतदात्मान्नियच्छन्ते³ ॥८॥ अथ द्वितीयां जुहोति⁴ । "उपसृजन्⁵धरुणं मात्र"ऽइत्यग्निमेवैतत्पृथिव्याऽउपसृजन्नाह "धरुणो⁶ मातरं धयान्नि"त्यग्निमेवैतत्पृथिवीं धयन्तमाह "रायस्पोषमस्मासु दीधरत्स्वाहे"ति पशवो वै रायस्पोषः पशूनेवैतदात्मन्नियच्छन्ते ॥९॥ ते प्राञ्च ऽउपनिष्क्रामन्ति । ते पश्चात्प्राञ्चो हविर्द्धाने सम्प्रपद्यन्ते पुरस्ताद्वै प्रत्यञ्चस्तᳪंस्यमानाऽ अथैवᳪंसत्रोत्थाने ॥१०॥ तऽउत्तरस्य हविर्द्धानस्य । जघन्यायां कूबर्याᳪं सामाभिगायन्ति "सत्रस्यऽर्द्धि"रिति र्द्धिमेवैतदभ्युत्तिष्ठन्त्युत्तरवेदेर्वोत्तरायाᳪंश्रोणावितरं तु कृततरम् ॥११॥ यदुत्तरस्य हविर्द्धानस्य । जघन्यायां कूबर्याम्"गन्म⁸ ज्योतिरमृता अभूमे"ति ज्योतिर्वा ऽएते भवन्त्यमृता भवन्ति य्ये सत्रमासते "दिवं पृथिव्या¹⁰ ऽअध्यारुहामे"ति दिवं वा ऽएते पृथिव्या ऽअध्यारोहन्ति य्ये सत्रमासतेऽ"विदाम¹¹ देवानि"ति व्विन्दन्ति हि देवा"न्त्स्वर्ज्योति¹²"रिति त्रिर्निधनमुपावयन्ति स्वर्ह्येते ज्योतिर्ह्येते भवन्ति तद्यदेवैतस्य साम्नो रूपं तदेवैते भवन्ति य्ये सत्रमासते ॥१२॥ ते दक्षिणस्य हविर्द्धानस्य । अधोधोक्षᳪंसर्पन्ति स यथाहिस्त्वचो निर्मुच्येतैवᳪं सर्वस्मात्पाप्मनो निर्मुच्यन्तेऽतिच्छन्दसा सर्पन्त्येषा व्वै सर्वाणि छन्दाᳪंसि यदतिच्छन्दास्तथैनान् पाप्मा नान्वत्येति त-

---

१. अश्नन्ति इति. ग. २. मा. सं. ८. ५१. ३. नियच्छन्ते इति. च.
४. जुहोति इति. च. ५-७. मा. सं. ८. ५१. ८-१२. मा. सं. ८. ५२.

स्मादतिछन्दसा सर्पन्ति ॥१३॥ ते सर्पन्ति । "ँयुवं तमिन्द्रापर्वता पुरोयुधा य्यो नः पृतन्यादप तं तमिद्धतं व्वज्रेण तं तमिद्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकॅं शत्रून् परि शूर व्विश्वतो दर्मा दर्षीष्ट व्विश्वत"ऽइति ॥१४॥ ते प्राञ्चऽउपनिष्क्रामन्ति । ते पुरस्तात्प्रत्यञ्चः सदः सम्प्रपद्यन्ते पश्चाद्वै प्राञ्चस्तॅंस्यमाना ऽअथै वॅं सत्रोत्थाने ॥१५॥ ते यथाधिष्ण्यमेवोपाविशन्ति । देवेभ्यो ह वै व्वाचो रसोऽभिजितोऽपचिक्रमिषां चकार स ऽइमामेव पराङ्त्यसिसृप्सदियं वै व्वाक्तस्याऽएष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्त्स ऽएनानाप्तोऽभ्यावर्त्तत तस्मादस्यामूर्ध्वा ऽओषधयो जायन्तऽऊर्ध्वा व्वनस्पतयस्तथोऽएवैतेभ्य ऽएतद्वाचो रसोऽभिजितोऽपचिक्रमिषति स ऽइमामेव पराङ्तिसिसृप्सतीयं वै व्वाक्तस्याऽएष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्ति स ऽएनानाप्तोऽभ्यावर्त्तते तस्मादस्यामूर्ध्वाऽओषधयो जायन्त ऽऊर्ध्वा व्वनस्पतयः ॥१६॥ सर्पराज्ञ्या ऽऋक्षु स्तुवते । इयं वै पृथिवी सर्पराज्ञी तदनयैवेतत्सर्वमाप्नुवन्ति स्वयम्प्रस्तुतमनुपगीतं यथा नान्य ऽउपशृणुयादति ह रेचयेद्यदन्यः प्रस्तुयादतिरेचयेद्यदन्य ऽउपगायेदति रेचयेद्यदन्यऽउपशृणुयात्तस्मात्स्वयम्प्रस्तुतमनुपगीतम्॥१७॥ चतुर्होतॄन् होता व्याचष्टे। एतदेवैतत्स्तुतमनुशॅंसति य्यदि होता न व्विद्याद्गृहपतिर्व्याचक्षीत होतुस्त्वेव व्याख्यानम्॥१८॥अथाध्वर्योः प्रतिगरः।'अरात्सुरिमे य्यजमाना भद्रमेभ्यो य्यजमानेभ्योऽभू'दिति कल्याणमेवैतन्मानुष्यै व्वाचो व्वदति ॥१९॥ अथ वाकोवाक्ये ब्रह्मोद्यं व्वदन्ति । सर्व्वं वै तेषामाप्तं भवति सर्वं जितं य्ये सत्रमासतेऽचारिषुर्यजुर्भिस्तत्तान्यापंस्तदवारुत्सताशॅंसिषुर्ऋचस्तत्ता आपंस्तदवारुत्सतास्तोषत सामाभिस्तान्यापंस्तत्तदवारुत्सताथैषामेतदेवानाप्तमनवरुद्धं भवति य्यद्वाको वाक्यं ब्राह्मणं तदेवैतेनाप्नुवन्ति तदवरुन्धते ॥२०॥ औदुम्बरीमुपसॅंसृप्य व्वाचं यच्छन्ति । व्विदुहन्ति व्वाऽएते यज्ञं निर्धयन्ति य्ये व्वाचा यज्ञं तन्वते व्वाग्घि यज्ञस्तामेषां पुरैकैक ऽएव

---

१. मा. सं. ८. ५३.

व्वाचंयम॒ऽआस्ते व्वा॒चमाप्याय॑स्तया॒पीनया॒यातयाम्न्यो॒त्तरम॒हस्तन्व॑ते॒ऽथात्र स॒र्वैव व्वा॒गाप्ता भवत्यपवृ॒क्ता ता॒ᳬ॑ सर्व॑ऽए॒व व्वाचंयमा व्वा॒चमा॒प्याययन्ति तया॒पीनया॒यातयाम्न्या॒ति॒रात्रं॑ तन्वते ॥२१॥ औ॒दु॒म्बरीमन्वार॒भ्यासते॒ । अ॒न्नं वाऽऊर्गु॒दुम्ब॒र ऊ॒र्जैवैतद्वा॒चमा॒प्याय॑यन्ति ॥२२॥ ते॒ऽस्तमिते प्रा॒ञ्चऽउपनि॒ष्क्रामन्ति । ते॒ जघ॒नेनाहवनी॒य॑मासते॒ऽग्रेण हविर्द्धा॒ने ता॒न्वाचंयम॒ानेव॒ व्वाचंयम॒ः प्रतिप्रस्थाता॒ व्वस॑तीव॒रीभिरभिप॒रिहरति ते य्य॒त्कामा ऽआ॒सीरंस्ते॒न व्वाचं व्वि॒सृजेरन् का॒मैर्ह स्म वै॒ पुर्॒षयः सत्त्र॒मासते ऽसौ॒ नः का॒मः स॒ नः स॒मृध्यता॒मि॒ति य्यद्यु॒ऽअनेककामाः स्युर्लो॒क॒कामा वा प्र॒जाकामा वा पशु॒कामा वा ॥२३॥ अने॒नैव व्वाचं व्वि॒सृजेरन् । "भूर्भु॒वः स्वरि॒"ति त॒त्स॑त्ये॒नैवैतद्वा॒चᳬ॑ स॒मर्द्धयन्ति त॒या स॒मृद्धयाशि॒ष ऽआ॒शासते "सु॒प्रजा॒ः प्रजा॒भिः स्यामे॒"ति त॒त्प्रजामा॒शासते "सु॒वीरा व्वीरै॒"रि॒ति तद्वीराना॒शासते "सु॒पो॒षाः पो॒षैरि॒ति तत्पुष्टिमा॒शासते॒ ॥ २४ ॥ अ॒थ गृह॒पतिः सुब्रह्मण्यामा॒ह्वयति । य्यं॒ वा गृह॒पतिर्ब्रूयात्पृथगु हैवै॒के सुब्रह्मण्यामा॒ह्वयन्ति गृह॒पति॒स्त्वेव॒ सुब्रह्मण्यामा॒ह्वये॒द्यं वा गृह॒पतिर्ब्रूयात्त॒स्मिन्त्स॑मुपहव॒मिष्ट्वा॒ स॒मि॒धो॒ऽभ्या॒दधति ॥२५॥ Cf का. श. ५. ८. ३.

इति माध्यन्दिनशाखीये शतपथब्राह्मणे चतुर्थकाण्डे पञ्चमप्रपाठके एकादशं ब्राह्मणम् ॥ ( अ. ६. ९. )

पञ्चमः प्रपाठकस्समाप्तः ॥

कण्डिकासंख्या १२६

( इति षष्ठोऽध्यायः )

इति ग्रहाख्यं चतुर्थं काण्डं समाप्तम् ॥ ४ ॥

( अस्मिन् काण्डे कण्डिकासंख्या ६४८ )

---

१-४. मा. सं. ८. ५३.